अन्यत्सुमतम् ।

अथान्यत् संप्रवक्ष्यामि तिलकं सर्वकामिकम् । गोरोचनं वंशलोचनं मत्स्यपित्तं काश्मीरकुङ्कुमकेसर-स्वयम्भूकुसुम-स्ववीर्य- श्रीखण्डरक्तचन्दनकस्तूरी - कर्पूर-काकजङ्घामूलानि समभागानि कृत्वा कूपतडागनदीजलेन मर्दयित्वा कुमारिकापार्श्वकां गुटिकां कृत्वा च्छायायां गुटिकां कारयेत् । तया ललाटे तिलकं कृत्वा यां यां स्त्रियं पश्यति सा सा वश्या भवति । "द्रौं वां धां त्रौं अं कं छः" इत्यनेन मन्त्रेण महिषास्थिमयं कीलकमेकोनविंशत्यङ्गुलं सहस्रेणाभिमन्त्रितं यस्य नाम्ना कूपतटे निखनेत् स महिषेण वध्यते ॥ "ॐ च्छः च्छः लृं अमुकं हुं ईं च्छः च्छः ॐ" इति । अनेन मन्त्रेण मयूरास्थिमयं कीलकं त्र्यङ्गुलं सहस्रेणाभिमन्त्रितं यस्य नाम्ना चतुष्पथे निखनेत् स तत्र भ्रमति । तत्रानेनावतिष्ठति पर्यटति क्षणमात्रेण उत्तोलनेन शान्तिर्भवति ॥ "ॐ श्रीं श्रीं व्रां व्रीं ईं ईं च्छः च्छः स्वाहा ।" अनेन मन्त्रेण मेषास्थिमयं कीलकं द्वादशाङ्गुलं सहस्रेणाभिमन्त्रितं कृत्वा यस्य गृहे-निखनेत् सर्वसिद्धिरसिद्धा तस्य भवति ॥

द्रींबन्धूकपुष्पसङ्काशं ध्यातव्यं मन्त्रदीपके ।
कुम्भकेन वरारोहे श्रृणु वक्ष्यामि षड्गुणम् ॥ २१ ॥
ध्यात्वा तु मासमेकं तु महास्त्रीमानयेद् ध्रुवम् ।
मासेनैकेन मनुना आनयेन्नागकन्यकाम् ॥ २२ ॥
देवकन्यां त्रिभिर्मासैः सायाह्ने नान्यथा भवेत् ।
"ॐ हं हः इति ।"
अनेनैव तु मन्त्रेण ध्यातव्याः क्रोधयाजकाः ॥ २३ ॥

याज्यस्य रुद्रसङ्काशं रुद्रहस्तं सुरासुरैः ।
मासेन मानुषं लोकं नागलोकं द्विमासतः ॥ २४ ॥
त्रिभिर्मासैस्तु देवेशि स्वर्गलोकं न संशयः ।
षण्मासाभ्यासयोगेन त्रैलोक्यं निश्चलं कुरु ॥ २५ ॥

"ॐ रक्तहटा रक्तगटा मुकुटधारिणी एधति स्वाहा।" मन्त्रराज उल्टा वेधा। "ॐ ह्रीं श्रीं ध्रीं विकृतानना बाह्ये फट् स्वाहा।" मन्त्रमिमं यन्त्रे लिखित्वा यस्य ईप्सितं दीयते स ऐकाहिकद्व्याहिकत्र्याहिकाविषमज्वरेण गृह्यते तत्क्षणादेव नश्यति नात्र संशयः॥"ॐ बन्धुन त्वयं द्रीं द्रीं अमुकस्यात्मानं नित्यज्वरेण पत्रीबन्धनमात्रस्य स्फुर स्वाहा।" इति नित्यज्वरशोधनपत्रिका ॥ "ॐ त्वः स्वाहा।" अनेन मन्त्रेण मन्त्रितं जलं भृशं कृत्वा ज्वरिताङ्गं सेचयेत्, तेन ज्वरविमुक्तिर्भवति निश्चितम् ॥

खरवाहनसिंहस्य क्रमादेवानुशासनम् ।
ऋक्षतुरगगतो वायुर्जीमूत इव गर्जितः ॥ २६ ॥
रविवारे श्लोकमिमं लिखित्वा शिरसि न्यसेत् ।
तेन स्थापितमात्रेण त्रैमासिकज्वरं हरेत् ॥ २७ ॥
वानेयस्य बिडालस्य गृहीत्वा रुधिरं ततः ।
पद्मसूत्रोत्थवर्तिं च भावयेत् सप्तवारकम् ॥ २८ ॥
शिवाग्रे तज्जतैलेन पातयेत् कज्जलं ततः ।
तेनाञ्जितलोचनस्तु अदृश्यो भवति ध्रुवम् ॥ २९ ॥

"हेभिरिहेभेरिहे।" अनेनोदकमादायालोक्य सहस्रवारं परिजप्य अनेनैवाञ्जनेन त्रिरात्रेण सिद्धिः। पद्मसूत्रवर्तिकस्य तैलेन कज्जलं पातयेत्, तेनाञ्जितनेत्रस्तु अदृश्यो भवति ।

ततो गोमूत्रेण चक्षुषी प्रक्षाल्य पुनः प्रत्यक्षो भवति ॥

अथ डाकिनीदमनमन्त्रः—"अक्षः क्षां क्षौकाजसिनौ देवता तत्त्वधूलिनी घोनाशालिनी भमन्त्रि बन्धुशनादैवतं लघुकण्टकेन पुरुमभिशासनो देवतां महाभैरव मण्डलमचल (मङ्गलवारेण) ओं च्छः च्छः च्छः डाकिनीमतबन्धु नमः। ओं नमो भगवते वज्राय चण्डेश्वराय ईं ईं फट् स्वाहा।" इति सर्वभूतडाकिनीदमनमन्त्रः ॥ "दमन सर्पलङ्ग एभलिसिमजबन्धनिशि नागपाशमचलः" इति दमनमन्त्रं बन्धनं च ॥ "ओं रंस्त्रीं शीघ्रं ह स्वाहा।" त्रिपुरां सिन्दूरशंखचूर्णाभ्यां उद्नालपत्रे लिखित्वा शोधयितव्यः स दिवसत्रयेण ज्वरेणागत्य मिलति । "ओं अहोहः अमुकनाम्नीं शीघ्रमानय स्वाहा" इत्याकर्षणम् ॥

"ओं स्त्रींस्त्रीं क्लीं क्लीं ईं अहः फट् स्वाहा।" मज्जनस्वस्थो भवति। "अप्सरणीं अमुकीं जीव।" तेन अनेन मन्त्रेण सप्तवारं जलं प्रजप्य कामिन्यै पानार्थं दातव्यम्। "ओं नमो जले मोहे कुले फलानि संकुले स्वाहा।" अनेन मन्त्रेण सप्तवाराभिमन्त्रितं यस्य दीयते स वश्यो भवति। "ओं नमो जले मोहे द्रां अब्जिनि फट् स्वाहा।" अनेन मन्त्रेण प्रत्यूषे पानीयेन मुखं प्रक्षालयेत् सर्वजनप्रियो भवति सर्वसिद्धीश्वरो भवति ॥

"ओंभूर्भुवः स्वः स्वाहा।" ताम्बूलं मन्त्रयित्वा यस्य दीयते स वश्यो भवति ॥ "ओं नमो जले मोहे हन हन दह दह पचपच मथमथ अमुकं मे वशमानय स्वाहा ॥"

अथ यक्षिणीमन्त्रसाधनम्— सुरसुन्दरी-मनोहारिणी-कन-

कावती-रतिकरी-कामेश्वरी-नटी-अनुरागिणी - पद्मिनी , एता अष्टौ यक्षिण्यः कामनायां साधनम् ।

अथ सुरसुन्दरीसाधनम्— "ओं ह्रीं आगच्छ आगच्छ सुरसुन्दरि स्वाहा ।" वज्रपाणिगृहं गत्वा गुग्गुलधूपं दत्त्वा त्रिसंध्यं पूजयेत् , सहस्रं त्रिसंध्यं मासपर्यन्तं जपेत् , ततो मासाभ्यन्तरे प्रत्यक्षा भवति, अन्तिमदिने रक्तचन्दनेनार्घ्यं दद्यात् । तत आगत्य माता भगिनी भार्या वा भवति तासां यानि कर्माणि तान्येव करोति । यदि माता भवति तदा सिद्धद्रव्याणि रसायनानि ददाति । यदि भगिनी भवति तदा पूर्ववदमूल्यं वस्त्रं ददाति । यदि भार्या भवति तदा सर्वमैश्वर्यं परिपूरयति । परन्तु वर्जनीयमिहान्यया सह शयनं, सा च मैथुनप्रिया भवति, अन्यथा नश्यति ॥ १ ॥

अथ मनोहारिणीसाधनम्— "ओं ह्रीं आगच्छ आगच्छ मनोहरि स्वाहा ।" इह नदीसङ्गमे गत्वा चन्दनेन मंण्डल कृत्वा अगुरुधूपं दत्त्वा सहस्रैकं मन्त्रं मासपर्यन्तं प्रत्यहं जपेत् । ततो मासान्ते चन्दनोदकेनार्घ्यं दद्यात् , पुष्पफलेनैकचित्तेन तस्या अर्चनं कर्तव्यं, ततोऽर्द्धरात्रसमये नियतमागच्छति , आगता सती तदाज्ञां करोति , सुवर्णशतं तस्मै साधकाय प्रत्यहं ददाति ॥ २ ॥

अथ कनकावतीसाधनम्— "ओं ह्रीं कनकावति मैथुनप्रिये आगच्छ आगच्छ स्वाहा ।" वटवृक्षसमीपे स्थित्वा मद्यमांसादिनैवेद्यं तस्यै मूलमन्त्रेण दत्त्वा शेषं स्वयमप्यङ्गीकृत्य सहस्रमेकं मूलमन्त्रं जपेत् । एवं सप्तदिनपर्यन्तं कुर्यात् । अष्टम्यां रात्रावर्द्धरात्रसमये वस्त्रालङ्कारभूषिता अष्टौ

परिवारानादायोपगच्छति । आगता सा कामयितव्या भार्या वा भवति, द्वादशजनानां वस्त्रालङ्कारभोजनं च ददाति, अष्टौ कला नित्यं साधकाय प्रयच्छति ॥ ३ ॥

अथ कामेश्वरीसाधनम्— "ॐ ह्रीं आगच्छ आगच्छ कामेश्वरि स्वाहा ।" इह गोरोचनया भूर्जपत्रोपरि स्त्रीरूपां प्रतिमां संलिख्य षोडशोपचारैः पञ्चोपचारैर्वा संपूज्य, ततः शय्यायामेकाकी एकान्ते उपविश्य तन्मना भूत्वा सहस्रं जपेत्, ततो मासान्ते तद्‌बुद्ध्या स्वकीयां भार्यां पूजयेत् । ततो मधुसर्पिभ्यां प्रतिरात्रं दीपं प्रज्वाल्य पश्चान्मौनं कृत्वा मूलमन्त्रं सहस्रसंख्यं जपेत् । ततोऽर्धरात्रसमये नियतमागच्छति, परन्त्वन्याः स्त्रियो वर्जनीयाः ॥ ४ ॥

अथ रतिप्रियासाधनम्— "ॐ ह्रीं आगच्छ आगच्छ रतिकारि स्वाहा ॥" अत्र पटे चित्ररूपिणी लेख्या वस्त्रकनकालङ्कारभूषिता उत्पलहस्ता कुमारी, जातीपुष्पैः प्रपूजनं कुर्यात्, गुग्गुलेन धूपं दद्यात्, ततोऽष्टसहस्रं प्रत्यहं जपेत् । मासान्ते तु विधिवत् पूजनं कुर्यात् । धूपदीपौ प्रज्वालनीयौ, ततोऽर्धरात्रसमयेऽवश्यमागच्छति, आगता सा स्त्रीभावेन कामयितव्या, भार्या भवति, साधकस्य परिवारं पालयति, दिव्यं कामिकं भोजनं च ददाति ॥ ५ ॥

अथ पद्मिनीसाधनम्— "ॐ ह्रीं आगच्छ आगच्छ पद्मिनि स्वाहा ।" स्वगृहे चन्दनेन मण्डलं कृत्वा शिरःस्थं कारयेत्, गुग्गुलेन धूपं दत्त्वा सहस्रमेकं प्रत्यहं जपेत्, ततो मासान्ते पौर्णमास्यां रात्रौ विधिवत् पूजां कृत्वा जपेत्। जपान्तेऽर्धरात्रसमये नियतमागच्छति, आगता सा काम-

यितव्या भार्या भूत्वा सर्वकामप्रदा भवति, रसं रसायनं सिद्धद्रव्यं प्रत्यहं साधकाय प्रयच्छति ॥ ६ ॥

अथ नटीसाधनम्— "ॐ ह्रीं आगच्छ आगच्छ नटि स्वाहा।" अत्राशोकतले गत्वा मत्स्यमांसाद्याहारगन्धपुष्पादिधूपदीपबलिं दत्त्वा सहस्रं प्रत्यहं जपेत्, ततः सा मासान्ते नियतमागच्छति, आगता सा माता भगिनी भार्या वा भवति। यदि माता भवति तदा दिव्यं कामिकं भोजनं ददाति, वस्त्रसुगन्धिसुवर्णशतं ददाति च। यदि भगिनी भवति, तदा शतयोजनादुत्तमां स्त्रियमानीय ददाति। यदि भार्या भवति तदा दिव्यं वस्त्रं रसायनमष्टदिनान्तरेण ददाति ७

अथानुरागिणीसाधनम्— "ॐ ह्रीं अनुरागिणि आगच्छ आगच्छ स्वाहा।" इह काश्मीरकुङ्कुमेन भूर्जपत्रे स्त्रीसदृशीं प्रतिमां विलिख्यावाहनादिकं कृत्वा गन्धपुष्पधूपदीपादिकं दत्त्वा ताम्बूलानि निवेद्य सहस्रं प्रत्यहं जपेत्। मासमेकं त्रिसंध्यं जपेत्, मासान्ते पौर्णमास्यां विधिवत् पूजां कृत्वा घृतदीपं प्रज्वाल्य समग्ररात्रौ मन्त्रं प्रजपेत्। ततः प्रभातसमये नियतमागच्छति, आगता सा सर्वकामप्रदा भवति, दिव्यरसायनानि ददाति, प्रत्यहं च दीनाराणां सहस्रं ददाति। तस्याः प्रसादेन वर्षसहस्राण्यायुश्च भवति ॥ ८ ॥

अथ षट्त्रिंशद्यक्षिण्यः—

विचित्रा विभ्रमा हंसी भीषणी जनरञ्जिनी।
विशाला मदना घण्टा कालकर्णी महाभया ॥ १ ॥
माहेन्द्री शंखिनी चान्द्री श्मशाना वटयक्षिणी।
मेखला विकला लक्ष्मीर्मालिनी शतपत्रिका ॥ २ ॥

सुलोचना सुशोभाढ्या कपालिनी विशालिनी ।
नटी कामेश्वरी स्वर्णरेखा च सुरसुन्दरी ॥ ३ ॥
मनोहरा प्रमोदानुरागिणी नखकेशिका ।
भामिनी पद्मिनी चैव स्वर्णावती रतिप्रिया ॥ ४ ॥
षट्त्रिंशदेता यक्षिण्यः कथिताः सिद्धिकामदाः ।
कराङ्किणीमते तन्त्रे महादेवेन विस्तरात् ॥ ५ ॥
आराधनं महत् तासां प्रवक्ष्यामि समासतः ।
फलं चैव यथा तुष्टाः प्रयच्छन्ति समाहितम् ॥ ६ ॥
(१) लक्षद्वयं जपेन्मन्त्रं वटवृक्षतले शुचिः ।
पश्चाच्चम्पकपुष्पैश्च होमं मधुघृतान्वितम् ॥ ७ ॥
कुर्याद् दशांशतो मन्त्री शंकरेणोदितं यथा ।
ततः सिद्धा भवेद् देवि विचित्रा वाञ्छितप्रदा ॥ ८ ॥
"ॐ विचित्रे चित्ररूपिणि मे सिद्धिं कुरु २ स्वाहा।" इति मन्त्रः
(२) लक्षद्वयं जपेन्मन्त्रं श्मशाने निभृते निशि ।
घृताक्तैर्गुग्गुलैर्होमे दशांशेन कृते सति ॥ ९ ॥
विभ्रमा तोषमायाति पञ्चाशन्मानुषैः समम् ।
ददाति भोजनं द्रव्यं प्रत्यहं शङ्करोऽब्रवीत् ॥ १० ॥
"ॐह्रीं विभ्रमे विभ्रमङगरूपे विभ्रमं कुरु रहिं २ भगवति स्वाहा।"
(३) प्रदेशे नगरस्याथ लक्षसंख्यं जपेन्मनुम् ।
पद्मपत्रैर्घृतोपेतैः कृते होमे दशांशतः ॥ ११ ॥
प्रयच्छत्यञ्जनं हंसी येन पश्यति भूनिधिम् ।
सुखेन तं च गृह्णाति न विघ्नैः परिभूयते ॥ १२ ॥
"ॐ ह्रीं नमो हंसि हंसवाहिनी क्लीं क्लीं स्वाहा ।"
(४) त्रिपथस्थो जपेन्मन्त्रं लक्षसंख्यं दशांशतः ।

घृताक्तगुग्गुलैर्होमे भीषणी चिन्तितप्रदा ॥ १३ ॥
"ॐ ऐं द्रीं महामोदे भीषणि द्रांद्रां स्वाहा ।"
(५) कदम्बाधो जपेन्मन्त्रं निशि लक्षद्वयं ततः ।
घृताक्तगुग्गुलैर्होमे देवी सौभाग्यदा भवेत् ॥ १४ ॥
"ॐ ह्रीं क्लीं जनरञ्जिके स्वाहा ।"
(६) बिल्ववृक्षतले मन्त्रं लक्षमावर्तयेच्छुचिः ।
शतपत्रोद्भवैः पुष्पैः सघृतैर्होममाचरेत् ॥ १५ ॥
ततः सिद्धा भवेद् देवि विशालाकाशगामिनी ।
ददाति मन्त्रिणे तुष्टा रसं दिव्यरसायनम् ॥ १६ ॥
"ॐ ऐं ह्रीं विशाले स्त्रांस्त्रीं एह्येहि स्वाहा ।"
(७) लक्षसंख्यं जपेन्मन्त्रं राजद्वारे स्थितः शुचिः ।
सक्षीरमालतीपुष्पैः कृते होमे दशांशतः ॥ १७ ॥
मदनायक्षिणी तुष्टा गुटिकां संप्रयच्छति ।
यया आस्यस्थयादृश्यः शुचिः स्थायी भवेन्नरः ॥ १८ ॥
"ॐ ह्रीं मदने मदनविडम्बिनि आलये सङ्गमं देहि देहि श्रीं स्वाहा ।"
(८) सुघण्टां वादयन्मन्त्री जपेन्मन्त्रायुतद्वयम् ।
तत्र क्षोभयते लोकान् दर्शनादेव साधकः ॥ १९ ॥
"ॐ ऐं द्रीं पुरीं क्षोभय प्रजाः क्षोभय भगवति गम्भीर-स्वने स्वप्ने स्वाहा ।"
(९) लक्षसंख्यं मनुं जप्त्वा पलाशतरुजेन्धनैः ।
मधुनाक्तैः कृते होमे कालकर्णी प्रसीदति ॥ २० ॥
सौख्यं ददाति तुष्टा वै गतिस्तम्भकरी भवेत् ।
सततं संस्मरेन्मन्त्री विविधाश्चर्यकारिणीम् ॥ २१ ॥

"ओं हुं कालकर्णि ठः ठः स्वाहा ।"

(१०) अस्थिमुद्राधरो लक्षं श्मशाने प्रजपेन्मनुम् ।
ततो महाभया सिद्धा यच्छत्यस्य रसायनम् ॥ २२ ॥
तेन भक्तिमात्रेण पर्वतानपि चालयेत् ।
वलीपलितनिर्मुक्तो न रोगं समवाप्नुयात् ॥ २३ ॥

"ओं द्रीं महाभये प्रें स्वाहा ।"

(११) शक्रचापोदये लक्षं निर्गुण्डीतुलसीस्थितः ।
जपेन्मन्त्रं ततः सिद्धा भवेत् पातालसिद्धिदा ॥ २४ ॥

"ओं ह्रीं माहेन्द्रि मन्त्रसिद्धिं कुरु कुरु कुलु २ हंसः सोहं स्वाहा"

(१२) मन्त्रायुतं जपेन्मन्त्री सति भानूदये शुचिः ।
शङ्खमालिकया पश्चादिन्धनैः करवीरजैः ॥ २५ ॥
घृताक्तैः होमयेन्मन्त्री दशांशेन शुचिस्ततः ।
ध्रुवं सिद्धा भवेद् देवी शङ्खिनी वाञ्छितप्रदा ॥ २६ ॥

"ओं ह्रीं शंखधारिणि शंखधारणे द्रां द्रीं क्लीं श्रीं स्वाहा ।"

(१३) एवं चान्द्र्याः साधनमपि बोध्यम् ।

(१४) चतुर्लक्षमिमं मन्त्रं श्मशाने प्रजपेच्छुचिः ।
नग्नव्रतोऽञ्जनं तुष्टा श्मशाने संप्रयच्छति ॥ २७ ॥
तेन पश्येन्नरोऽदृश्यो विचरेद्वसुधातले ।
निधिं पश्यति गृह्णाति न विघ्नैः परिभूयते ॥ २८ ॥

"ओं द्रां द्रीं श्मशानवासिनि स्वाहा ।"

(१५) त्रिपथस्थो वटाधःस्थो रात्रौ मौनी जपेत्तु वै ।
लक्षत्रयं ततः सिद्धा देवी स्याद्वटयक्षिणी ॥ २९ ॥
वस्त्रालङ्करणं दिव्यं रससिद्धिं रसायनम् ।
दिव्याञ्जनं च संतुष्टा साधकस्य प्रयच्छति ॥ ३० ॥

"ॐ श्रीं ह्रीं वटवासिनि यक्षकुलप्रसूते वटयक्षिणि एह्येहि स्वाहा ।"

(१६) मधूकवृक्षतले मन्त्रं चतुर्दशदिनावधि ।
प्रजपेन्मेखला तुष्टा ददात्यञ्जनमुत्तमम् ॥ ३१ ॥

"ॐ ह्रीं हुं मदनमेखलायै मदनविडम्बनायै नमः स्वाहा ।"

(१७) गुहान्तःस्थोऽधरे मासत्रयं मन्त्रं जपेन्नरः ।
ततः सिद्धा भवेद्देवि विकला वाञ्छितप्रदा ॥ ३२ ॥

"ओं विकले ऐं ह्रीं श्रीं क्लीं स्वाहा ।"

(१८) स्वगृहावस्थितो रक्तैः प्रसूनैः करवीरजैः ।
लक्षमावर्तयेन्मन्त्री दूर्वाज्याभ्यां दशांशतः ॥ ३२ ॥
होमे कृते भवेत् सिद्धा लक्ष्मीनाम्नी च यक्षिणी ।
रसं रसायनं दिव्यं निधानं च प्रयच्छति ॥ ३३ ॥

"ॐ ऐं ह्रीं श्रीं लक्ष्मि कमलधारिणि हंसः सोहं स्वाहा।"

(१९) चतुष्पथस्थितो लक्षमापदि प्रजपेन्मनुम् ।
मालिनी जायते सिद्धा दिव्यं खड्गं प्रयच्छति ॥ ३४॥
यत्प्रभावेन लोकेऽस्मिन् दुर्लभं राज्यमाप्नुयात् ।

"ॐ ह्रीं ॐ नमो मालिनी स्त्रि एह्येहि सुन्दरि हंसहंसि समीहं मे सङ्गभय स्वाहा ।"

(२०) शतपत्रवने यस्तु मन्त्रलक्षं जपेन्मुनिः ।
क्षीराज्यहोमैः संसिद्धा सिद्धिं यच्छति भूनिधिम् ॥ ३५ ॥

"ॐ ह्रीं शतपत्रिके ह्रीं ह्रीं श्रीं स्वाहा ।"

(२१) नदीतीरस्थितो लक्षत्रयं मन्त्री जपेन्मनुम् ।
घृतहोमे दशांशेन कृते देवी प्रसीदति ॥ ३६ ॥
ददाति पादुकां तस्मै यथारुचि नभस्तले ।

मनःपवनवेगेन याति चायाति साधकः ॥ ३७ ॥
"ॐ ह्रीं क्लीं सुलोचने सिद्धिं मे देहि देहि स्वाहा ।"
(२२) रक्ताम्बरधरो मन्त्री चतुर्दशादिनावधि ।
जपेत् सिद्धा भवेद् देवी शोभना भोगदायिनी ॥ ३८ ॥
"ॐ ह्रीं अशोकपल्लवकरतले शोभने श्रीं क्षः स्वाहा ।"
(२३) महाव्रतधरो मन्त्री यः शाल्योदनभोजनैः ।
लक्षद्वयं जपेन्मन्त्रं कपालं लभते मुनिः ॥ ३९ ॥
आकाशगमनं दूरात् स्वप्नरूपसमागमः ।
दूरादर्शनमित्यादि साधकाय प्रयच्छति ॥ ४० ॥
"ॐ ऐं कपालिनी द्रां द्रीं क्लां क्लीं क्लूं क्लैं क्लौं क्लः हंसः सोहं सकलह्रीं फट् स्वाहा ।"
(२४) सरित्तीरे जपेन्मन्त्रमर्धं लक्षस्य देशिकः ।
घृताक्तगुग्गुलैर्होमे देवी सौभाग्यदा भवेत् ॥ ४१ ॥
"ओं वरयक्षिणि वरयक्षविशालिनि आगच्छ २ प्रियं मे भवतु हैमे भव स्वाहा ।"
(२५) पुण्याशोकतलं गत्वा चन्दनेन सुमण्डलम् ।
कृत्वा चाभ्यर्चयेद् देवीं धूपं दत्त्वा सहस्रकम् ॥ ४२ ॥
मन्त्रमाराधयेन्मासं नक्तभोजी रसः सदा (?) ।
रात्रौ पूजां शुभां कृत्वा जपेन्मन्त्रं मुनिव्रतः ॥ ४३ ॥
नटी देवी समागत्य निधानं रसमञ्जनम् ।
ददाति मन्त्रिणे मन्त्रं दिव्ययोगं च सिद्धिदम् ॥ ४४ ॥
"ॐ ह्रीं नटि महानटि रूपवति ह्रीं स्वाहा ।"
(२६) एकासने शुचौ देशे त्रिसंध्यं त्रिसहस्रकम् ।
मासमेकं जपेन्मन्त्रं तदा पूजां समारभेत् ॥ ४५ ॥

पुष्पैर्धूपैश्च नैवेद्यैः प्रदीपैर्घृतपूरितैः ।
रात्रौ देवीं समभ्यर्च्य जपेन्मन्त्रं प्रसन्नधीः ॥ ४६ ॥
अर्धरात्रे गते देवी समागत्य प्रयच्छति ।
रसं रसायनं दिव्यं वस्त्रालङ्करणानि च ॥ ४७ ॥
"ॐ ह्रीं आगच्छ आगच्छ कामेश्वरि स्वाहा ।"
(२७-२८) (स्वर्णलेखा ! सुरसुन्दरी च प्रागुक्ता)
(२९) नदीतीरे शुभे रम्ये चन्दनेन सुमण्डलम् ।
विधाय पूजयेद् देवीं ततो मन्त्रायुतं जपेत् ॥ ४८ ॥
एकविंशतिघस्रान्तं प्रसन्ना वितरेत् सदा ।
अर्धरात्रे गते देवी दीनाराणां सहस्रकम् ॥ ४९ ॥
ददाति प्रत्यहं तस्मै व्ययं कुर्याद् दिने दिने ।
तद्व्ययाभावतो भूयो न ददाति प्रकुप्यति ॥ ५० ॥
"ॐ ह्रीं सर्वकामदे मनोहरे स्वाहा ।"
(३०) अर्धरात्रे समुत्थाय सहस्रं प्रजपेन्मनुम् ।
मासमेकं ततो देवी निधिं दर्शयति ध्रुवम् ॥ ५१ ॥
"ॐ ह्रीं प्रमोदायै स्वाहा ।"
(३१) कुङ्कुमेन समालिख्य भूर्जे देवीं सुलक्षणाम् ।
प्रतिपत्तिथिमारभ्य धूपदीपादिभिर्वराम् ॥ ५२ ॥
कृत्वा देवीं सहस्रं च त्रिसंध्यं परिवर्तयेत् ।
मासमेकं ततः पूजां रात्रौ कृत्वा पुनर्जपेत् ॥ ५३ ॥
अर्धरात्रे गते देवी समागत्य प्रयच्छति ।
दीनाराणां सहस्रैकं प्रत्यहं परितोषिता ॥ ५४ ॥
"ॐ अनुरागिणि मैथुनप्रिये यक्षकुलप्रसूते स्वाहा ।"
(३२) गत्वा पक्षिगृहं मन्त्री नखकेशैः प्रपूजयेत् ॥ ५५ ॥

दिनैकविंशतिर्यावत् पूजां कृत्वा ततो निशि ।
आवर्तयेदेकचित्तो मन्त्री मन्त्रं सुसंयतः ॥ ५६ ॥
निशार्धे वाञ्छितं कार्यं देव्यागत्य प्रयच्छति ।
"ॐ ह्रीं नखकेशिके स्वाहा ।"
(३३) दिनत्रयमनाहारी सोमसूर्यग्रहे सति ॥ ५७ ॥
स्पर्शाद्विमुक्तिपर्यन्तं जपेत् तद्गतमानसः ।
ततः प्रसन्ना सा देवी यच्छत्यञ्जनमुत्तमम् ॥ ५८ ॥
तेनाञ्जितो नरोऽदृश्यं निधिं पश्यति भूगतम् ।
"ॐ ह्रीं यक्षिणि भामिनि रतिप्रिये स्वहा ।"
(३४) (पद्मिनी प्रागुक्ता ३५ पृ०)
(३५) वटवृक्षतले कृत्वा चन्दनेन सुमण्डलम् ॥ ५९ ॥
यक्षिणीं पूजयित्वा तु नैवेद्यमुपदर्शयेत् ।
शशमांसं घृतं क्षीरं मन्त्रमावर्तयेत् ततः ॥ ६० ॥
दिने दिने सहस्रैकं यावत् सप्तदिनं भवेत् ।
अथागत्य सदा तस्मै मन्त्रमञ्जनमुत्तमम् ॥ ६१ ॥
यत्प्रभावान्तरे सर्वं पश्येन्निधिमशङ्कितः ।
"ॐ ह्रीं आगच्छ २ स्वर्णावति स्वाहा ।"
(३६) शष्कुलिपटे यस्माद् देवीं गौरीं धृतोत्पलाम् ॥६२॥
सर्वालङ्कारिणीं दिव्यां समालिख्यार्चयेन्नरः ।
जातीपुष्पैः प्रपूज्याथ सहस्रं परिवर्तयेत् ॥ ६३ ॥
सप्ताहं मन्त्रवित् तस्याः कुर्यादर्चां शुभां ततः ।
अर्धरात्रे गते देवी समागत्य प्रयच्छति ॥ ६४ ॥
पञ्चविंशतिदीनारान् प्रत्यहं परितोषिता ।
वाञ्छितं मनसस्तस्मै मन्त्रज्ञाय न संशयः ॥ ६५ ॥
'ॐ ह्रीं रतिप्रिये स्वाहा ।"

इति श्रीपार्वतीश्वरसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वरतन्त्रे यक्षिणीपटलः नवमः ॥ ९ ॥

---

अथ

## दशमः पटलः ।



तत्र चेटकसाधनम् । अथ चेटका लिख्यन्ते—

कामातुरेण चित्तेन निशि मन्त्रं जपेत् सदा ।
जप्तोऽवश्यं वश्यकरो मन्त्रोऽयं नात्र संशयः ॥ १ ॥

"ॐ ऐं स्क्लीं क्लीं क्लीं सहवल्लरि क्लीं कामपिशाच क्लीं ह्रीं कामपिशाच अमुकीं कामिनीं कामयाम्यहं तां कामेन ग्राहय २ स्वप्ने मम रूपे नखैर्विदारय २ द्रावय २ अस्त्रेण बन्धय २ श्रीं फट् स्वाहा ।"

जपेन्मासत्रयं मन्त्रं कम्बलः सुप्रसन्नधीः ।
मृतकोत्थापनं कुर्यात् प्रतिमां चालयेत्तथा ॥ २ ॥

"सदारक्तकम्बल महादेवदूत मृतकमुत्थापय २ प्रतिमां चालय २ पर्वतान् कम्पय २ लीलया विलसय २ ईं ईं फट् स्वाहा ।"

चतुर्लक्षं जपेन्मन्त्रं सागरस्य तटे शुचिः ।
पत्रपुष्पफलादीनि करोत्याकर्षणं ध्रुवम् ॥ ३ ॥

"अभय घुद्घुताकर्ष कर्मकर्ता सृष्टिपुत्र अमुकं आकर्षय द्रीं ।"

सहस्राष्टमिमं मन्त्रं जपेत् सप्तदिनावधि ।
प्रत्यहं मणिभद्राख्यः प्रयच्छत्येकरूप्यकम् ॥ ४ ॥

"ॐ नमो मणिभद्राय नमः पूर्णभद्राय नमो महायक्षाय

सेनाधिपतये मौद्ध्मौद्धधराय सुघटमुद्रावहे स्वाहा ।"

त्रिसंध्यं बलिदानं च निशायां प्रजपेन्मनुम् ।
सहस्रं हि जपेन्नित्यं यावत् स्वप्नं प्रजायते ॥ ५ ॥
प्राणिनां मृत्युसमयं वदत्येव न संशयः ।

"ॐ नमो भगवते रुद्राय देहि मे वचनसिद्धिविधानं पार्वतीपते ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ।"

रात्रौ रात्रौ जपेन्मन्त्रं सागरस्य तटे शुचिः ।
लक्षजापे कृते सिद्धो दत्ते सागरचेटकः ॥ ६ ॥
रत्नत्रयं तदा मौन्यं यस्मिन्मन्त्री सुखी भवेत् ।
सहस्रदशकं नित्यं रात्रौ मन्त्रं जपेत् सुधीः ॥ ७ ॥
तद्दशांशं मधुपयोमिश्रैः पद्मैश्च होमयेत् ।

"ॐ नमो भगवते रुद्र देहि मे निजराशिं श्रीं नमोऽस्तु ते स्वाहा ।" "ॐ ह्रीं अमुकं रञ्जय स्वाहा ।" अनेन मन्त्रेण सर्वजनास्तस्मात् तु रञ्जका भवन्ति, निशाचरं ध्यात्वा आत्मपाणिना जपनाददृश्यकारिणीं विद्यामाप्नोति ॥ "ॐ नमो रसाचारिणे महेश्वराय मम पर्यटने सर्वलोकलोचनानि बन्धय २ देव्याज्ञापयति स्वाहा ।" सकृदुच्चारमात्रेण नृसिंहचेटकाख्यो मन्त्रो डाकिन्यादिदोषं नाशयति । "ॐ नमो भगवते हिरण्यकशिपुबलविदारणाय त्रिभुवनव्यापकाय भूतप्रेतपिशाच-कूष्माण्डब्रह्मराक्षसयोगिनी-डाकिनी - कुलोन्मूलनाय स्तम्भोद्भवाय समस्तदोषान् नाशय २ विसर २ कम्पय २ मथ २ हूं हूं स्वाहा, एह्येहि रुद्र आज्ञापयति स्वाहा ।" प्रेरकः सहस्रपादः अनिद्रामाकर्षयति । "ॐ प्रेरक अमुकीं तव मंण्डलं समावर्तय द्रावय दाहय संतापय ह्रौं॥"

इति श्रीपार्वतीश्वरसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वरमहातन्त्रे यक्षिणीचेटकनिरूपणं दशमः पटलः ।१०।

---

अथ

# एकादशः पटलः ।

अथ दिग्बन्धनमन्त्रः—"वज्रक्रोधाय महादन्ताय दशदिशो बन्ध बन्ध हूं फट् स्वाहा ॥" अथ योनिसंकोचनम्—

कुमुदं हरितालं च पिष्ट्वा योनिं प्रलेपयेत् ।
त्रिरात्रं पञ्चरात्रं च योनिर्भवति संयुता ॥ १ ॥
मांसी चन्दनमुस्ता च तगरं नागकेसरम् ।
एभिर्मासप्रयोगं च भगलेपनमुत्तमम् ॥ २ ॥
मालतीकुसुमैस्तैलैर्वल्कैर्वराङ्गलेपनम् ।
ऋतुकालेऽथवा कुर्यात् तदा तत्तुल्यता भवेत् ॥ ३ ॥
डिम्बस्थानीय पञ्चाङ्गं सर्षपतैलपाचितम् ।
सततमभिलेपेन सा भर्तारं वशं नयेत् ॥ ४ ॥
मूलं तु वानरीशृङ्गं छागीमूत्रेण लेपयेत् ।
लेपनात्तु ततः शिश्नं यथेच्छं कामयेद्बलात् ॥ ५ ॥
सौभाग्यपिप्पली लाक्षा विषं च क्रमवर्द्धितम् ।
लेपं प्रक्षालितं लिङ्गं नारी कामयते चिरात् ॥ ६ ॥
पारावतं तथा गुञ्जा श्वेतोत्पलं समाक्षिकम् ।
नाभिलेपनमित्युक्तं वीर्यस्तम्भकरं परम् ॥ ७ ॥
द्वादशारं लिखेच्चक्रं कुङ्कुमेन समन्वितम् ।

भूर्जपत्रेऽथवा वस्त्रे नेत्रे बद्धफलादिके ॥ ८ ॥
पत्रे पत्रे लिखेद्बीजं ह्रींकारं परमोज्ज्वलम् ।
साध्यनाम तथा मध्ये कर्णिकायां विशेषतः ॥ ९ ॥
विदर्भमन्त्रमुख्येन तत्कूटं परिमण्डले ।
मृत्तिकाभिः समस्ताभिः प्रतिमां कारयेद् दृढम् ॥ १० ॥
कर्षयेत् प्रमदां नृणां गर्वितां तु न संशयः ।
वैराग्यं न पुनर्याति दासीभावेन तिष्ठति ॥ ११ ॥
दाडिमं पञ्चकोलं च लोहं वज्रोरसं घृतम्[1] ।
चूर्णं भूमन्दरा शाखा दन्तनखं करोति वै ॥ १२ ॥
मनःशिला प्रयङ्गुश्च रोचना नागकेसरम् ।
नेत्राञ्जनसमायुक्तं सर्वसत्त्ववशङ्करम् ॥ १३ ॥

इति श्रीपार्वतीश्वरसंवादे वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वरमहातन्त्रे योनिसंकोचनादिनिरूपणमेकादशः पटलः ॥ ११ ॥

---

अथ

# द्वादशः पटलः ।

"ॐ ह्रीं श्रीं क्लीं द्रं चण्डोग्रे त्रिनेत्रे चामुण्डे अरिष्टे हूँ फट् स्वाहा। ह्रीं नमाम्यहं महादेवं नृसिंहं भीमरूपिणं ॐ नमस्तस्मै"

श्रीपार्वत्युवाच ।

उड्डीशेन समाकीर्णे योगिवृन्दसमाकुले ।
प्रणम्य शिरसा गौरी परिपृच्छति शङ्करम् ॥ १ ॥

---

१ "वज्ररसैर्युतम् पाठान्तरम्" ।

श्रीईश्वर उवाच ।

शृणु त्वं हि वरारोहे सिद्ध्यर्थं प्रतिवासरे ।
तं वदिष्यामि ते देवि सर्वं तत्समुपाहृतम् ॥ २ ॥
देवि यो द्विजो मन्त्रैस्तु विप्रहन्यान्न संशयः ।
पूर्वोदितं मयोड्डीशं कथ्यते तव भक्तितः ॥ ३ ॥
उड्डीशं च नमस्कृत्य रुद्रं चैव सुदुर्जयम् ।
कपर्दिनं विरूपाक्षं सर्वभूतभयावहम् ॥ ४ ॥
प्रथमं भूतकरणं द्वितीयोन्मादनं तथा ।
तृतीयं द्वेषणं चैव तुर्यमुच्चाटनं तथा ॥ ५ ॥
ग्रामोच्चाटं पञ्चमं च षष्ठं च जलस्तम्भनम् ।
सप्तममग्निस्तम्भं च वशीकरणमष्टमम् ॥ ६ ॥
अन्यानपि प्रयोगांश्च शृणुष्व वै वरानने ।
शिवेन कथिता योगा उड्डीशे शास्त्रनिश्चये ॥ ७ ॥
अन्धी च वन्धीकरणं मूकीकारस्तथैव च ।
गात्रसंकोचनं चैव भूतज्वरकरस्तथा ॥ ८ ॥
अस्त्रशस्त्रस्य त्रुटितं पानीयस्य विनाशनम् ।
दधिमधुनाशनं च नखकरणं तथैव च ॥ ९ ॥
गजानां वाजिनां चैव प्रकोपनं परस्परम् ।
आकर्षणं भुजङ्गानां मानवानां तथा ध्रुवम् ॥ १० ॥
सस्यविनाशनं चैव गर्भस्यान्तर्धिकारणम् ।
वेतालाञ्जनसिद्धिश्च उलूकसिद्धिरपि हि ॥ ११ ॥
अन्यानपि महारौद्रान् प्रयोगान् शृणु साम्प्रतम् ।
विद्यामन्त्रप्रयोगांश्च औषधं चाभिचारिकम् ॥ १२ ॥
गुप्ता गुप्ततराः कार्या रक्षितव्याः प्रयत्नतः ।

अकुलीनाधमबुद्धेर्भक्तिहीनस्य वै तथा ॥ १३ ॥
हिंसकस्य च क्षुद्रस्य निन्दकस्य विशेषतः ।
स्वार्थं फलादिलुब्धस्य उपदेशममन्यतः ॥ १४ ॥
अस्मिन् शापे(स्त्रे) पूरुषास्ते वर्जनीयाः प्रयत्नतः ।
एतैश्च सह संयोगो न कार्यः सर्वदा बुधैः ॥ १५ ॥
य उड्डीशक्रियाशक्तिभेदं कुर्वन्ति मोहिताः ।
ते दुष्टा दुर्जयाश्चैव किमत्र बहुभाषितैः ॥ १६ ॥
यदीच्छासिद्धिमात्मानमात्मार्थं हि तथैव च (?) ।
सत्पूरुषाय दातव्यं देवगुरुरताय च ॥ १७ ॥
प्रयोगास्तु प्रयोक्तव्याः साधकैः शत्रुकारणे ।
अनिमित्ता निवर्तन्ते स्वात्मग्राहे न संशयः ॥ १८ ॥
असंन्तुष्टो ह्ययुक्तश्च प्रयोगानिति नाचरेत् ।
शास्त्रसिद्धविचारास्तु सामन्तकोषकाः ? शुभाः ॥ १९ ॥

"ॐ ग्लौं गं गणेशाय नमः ।"

मन्त्रेणानेन मन्त्रज्ञः कुम्भकारमृदा तथा ।
लम्बोदरं प्रकुर्वीत पूजयेदुपचारकैः ॥ २० ॥
सास्राह्निकं त्रिसंध्यायां जप्तव्यं सावधानतः ।
सहस्रैकप्रमाणेन जपाच्छान्तिर्भविष्यति ॥ २१ ॥
प्रातरष्टोत्तरं जप्त्वा लभेद् बुद्धिं शुभां नरः ।
मासेनैकेन देवेशि श्रीलाभश्च भवेद् ध्रुवम् ॥ २२ ॥
षण्मासेन वरारोहे महाधनपतिर्भवेत् ।
त्रिकालज्ञानवेत्ता च वर्षैकेन न संशयः ॥ २३ ॥

"ऐं नमः स्वाहा ।"

प्रातः सहस्रवारं तु प्रजप्तेन प्रपूजयेत् ।

वरदां तु महादेवीं श्वेतगन्धानुलेपनैः ॥ २४ ॥
पुष्पैर्जापैर्दक्षिणादिसोपचारैस्तु प्रत्यहम् ।
सप्तमे दिवसे ह्येवं वागैश्वर्यं प्रजायते ॥ २५ ॥
भवेत् सद्यः प्रवक्ता च श्रुतिस्मृतिधरोऽपि च ।
बान्धवः सर्वभूतानां चिरायुः सुखमेधते ॥ २६ ॥
"ओं क्लीं"
मन्त्रेणानेन देवेशि साधकः जपमारभेत् ।
रक्तवस्त्रावृतो नित्यं तथा कुङ्कुमजाङ्गले ॥ २७ ॥
सप्ताहजपमात्रेण ह्यानयेत् त्रिदशाङ्गनाम् ।
"ओं ह्रीं ह्रीं ह्रीं ह्रीं स्वाहा ।"
पूर्वविधानपूतो हि जपेदेकान्तसंस्थितः ॥ २८ ॥
आकर्षति स्त्रियं शस्तां सालङ्कारां सुवाससम् ।
"ओं हैं हः हुं ।"
ऊर्ध्वदृष्टिप्रयोगेण जपेल्लक्षत्रयं प्रिये ॥ २९ ॥
सर्वपापविनिमुक्तो जायते खेचरे पदे ।
"ओं ह्रीं कारीण्डः क्षः क्षीं फट् स्वहा ।"
एकपादस्थितो भद्रे जपेदष्टोत्तरं शतम् ॥ ३० ॥
यद्यत् प्रार्थयते वस्तु तद् ददाति दिने दिने ।
यजेन्नरविशेषं च देवाग्निगुरुब्राह्मणैः ॥ ३१ ॥
"ओं श्रीं क्षीं लोहं मुञ्च किलि किलि अमुकं काटय काटय मातङ्गिनि स्वाहा ।"
मन्त्रेणानेन पूर्वाह्ले पूजयन्नुपचारकैः ।
शरावं पूरयित्वा तु चतुष्पथे बलिं हरेत् ॥ ३२ ॥
समन्त्रं क्षिप्यति पुमान् पुरुषं यदि पश्यति ।

आत्मचिन्तितकार्याणि साधयत्येव नान्यथा ॥ ३३ ॥

"ओं स्तम्भिनि स्वाहा, कपालिनि स्वाहा, ह्रीं ह्रीं वैषादार्थिनि स्वाहा छः छः।"

मन्त्रेण मृत्तिकां जप्त्वा प्रतार्य सप्तधा जले ।
संमुखीभूय क्षिप्त्वा च जप्त्वा चायुतं ? वासरे ॥ ३४ ॥
तेन सिद्धो भवेन्मन्त्रः साधकस्य न संशयः ।

"ओं श्रीं त्तां त्तीं त्तूं त्तैं त्तौं त्तः ।"

मध्याह्नसमये सूर्यसंमुखे जपमाचरेत् ॥ ३५ ॥
अयुतं जप्तमात्रेण स्वसामर्थ्यं प्रपश्यति ।
तस्य दृष्टिनिपातेन द्विपदश्च चतुष्पदः ॥ ३६ ॥
ज्वराभिभूता जायन्ते अपूर्वा मन्त्रसंपदः ।

"ओं हंसः हंसं सोहं स्वाहा ।"

एकविंशतिजप्तेन जलेन ज्वरपीडितः ॥ ३७ ॥
विमुच्यते पानमात्रात् सद्यः स्वस्थश्च जायते ।

"ओं ह्रीं नमो घोरेश्वरि घोरमुखि चामुण्डे ऊर्ध्वकेशि विकृतानने ह्रीं ह्रीं हुं फट् हुं स्वाहा ।" अयं सर्वदलनमन्त्रः ॥ "ओं ह्रीं ह्रीं ह्रीं फट् फट् फट् स्वाहा सर्वग्रहाणां त्रासनं कुरु कुरु अङ्गुलिप्रहारेण ।, ओं सृं स्रां स्रिं स्रीं स्रुं स्रूं स्रें स्रैं स्रों स्रौं स्रं स्रः ह रं रौं रीं रूं रैं रेविः छुं छुं हंसः अमृतवर्चसे स्वाहा ।" अनेन मन्त्रेणोदकं शरावे संक्षिप्याष्टोत्तरशतेनाभिमन्त्रितं कृत्वा पिबेत् प्रातरुत्थाय संवत्सरेण वलीपलितवर्जितो भवति । वृक्षस्थावरजङ्गमाकृतिं समाङ्गीकाराच व्याघ्रलोमादिकं पूर्वोदर्यां भस्मीकरोति सर्वजनप्रियो भवति चिरायुर्भवति ।

"ॐ नमो भगवते रुद्राय चण्डेश्वराय हुं हुं हुं फट् स्वाहा।" अनेन मन्त्रेण जपं कृत्वा शीघ्रमीप्सितं लभेत्। "ॐ ह्रूं ह्रीं त्वं त्वां त्विं त्वीं त्वुं त्वूं त्वें त्वैं त्वों त्वौं त्वं त्वः ह्रूं फट् स्वाहा।" इमं मन्त्रं पूर्वं लक्षमेकं जपेत्, तद्दशांशमयुतं हवनं कुर्यात्। एकैकं समिधं घृताक्तां जुहुयात् सिद्धो भवति, गङ्गागोलोके न ते मेघाः प्रणश्यन्ति नच वर्षन्ति, वासवो नदसमुद्रं शोषयति, मेघस्तम्भो भवति। उदकमध्ये स्थित्वा जपं करोत्यनावृष्टिकालेऽतिवृष्टिं करोति। "ॐ ह्रीं प्रचलिते कुवेरे ह्रूं ह्रूं किलि किलि स्वाहा।" पूर्ववेलायामादर्शदीपसमीपे षडङ्गुलेन भाजने सूर्यमण्डले कुमारं वामे वेशयति, पूर्वमयुतजपः कर्तव्यः पञ्चोपचारेण पूजा च कर्तव्या पूर्वाभिश्च (?) स्वराज्ये। "ॐ श्रीं हिमजाते प्रयच्छ मे धनं स्वाहा।" अनेन मन्त्रेण सिद्धार्थकं घृतमिश्रितं हुनेत् अष्टोत्तरशतेन, अन्नपानविमिश्रितं सहस्रेण हुनेत् मनसः प्रार्थितं लभेत्, अयुतं हुनेच्छ्रीसुमना भवेत्, लक्षं हुनेद् ग्रामशतं लभेत्॥ "ॐ नमोनमः।" इमं मन्त्रं शतं जपेत्, सर्वकामप्रदोऽयं मन्त्रः॥ "ॐ ह्रीं श्रीं सारसे सिद्धिकरि क्रीं नमः स्वाहा।" इमं मन्त्रं लक्षमेकं जपेद्रक्तकरवीरैश्च पूजयेत् सततं, सर्वकामदोऽयं मन्त्रः॥ "ॐ हुं त्वें त्वें हुं त्वः अमुकं त्वः स्वाहा।" अनेन मन्त्रेण राजिकालवणतुषकण्टकशिवनिर्माल्यं कटुतैलेन युतं हुनेत्, समस्तस्त्रीभाजनं भवति॥ "ॐ हुं हुं हुं लूं लं हुं लौं हुं लः अमुकं छः छः स्वाहा।" अनेन मन्त्रेण सिद्धार्थं भस्मना सह मान्त्रितं कर्तव्यं यस्य गृहे प्रक्षिप्य मन्त्रबलिपार्श्वैराक्षिपेत् तस्य बाहु-

स्तम्भो भवति । रिपुसैन्याग्रे क्षिपेत् शत्रुसैन्यस्तम्भो भवति, अश्वगजनरा निश्चेष्टा भवन्ति, विकला भवन्ति, समन्तादेवाकुला भवन्ति ॥

"ॐ रुं रुं मुखे स्वाहा ।" अनेन मन्त्रेण जप्ततैलेन मुखं प्रक्षाल्य तिलतैलेन गात्राभ्यङ्गं वा विधाय वातादिकं दिनसप्तकेन नश्यति । "ऐं मातङ्गि विमलावति विकराले द्रीं छः छः स्वाहा ।" अनेन मन्त्रेण जपापुष्पं परिजप्य वारिणि नद्यादौ होमयेत्, सप्ताहेन ईप्सितं फलं लभेत् ।

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रभृत् ।
तन्नामकीर्तनादेव हृतं नष्टं च लभ्यते ॥ ३८ ॥
नित्यं नित्यं जपेत् किञ्चिद्विद्यां वित्तस्य प्राप्तये ।

"ॐ मं क्षिणि स्वाहा ।" इति वृश्चिकमन्त्रः । "ॐ हुं हुं हंसः हंसः सोहं सोहं स्वाहा ।" इति सर्वविषापहरणमन्त्रः । मयूरपिच्छेन कुशेन शरेण शरदण्डेन वा तद्देहे संमार्जनं कुर्यात् ॥

"हं हां हिं हीं हुं हूं हें हैं हों हौं हं हः छः छः स्वाहा ।" इमं गोक्षीरसदृशं वारं वारं विचिन्तयेद्वा वराननमुखे शिरसि शरीरे ततः कण्ठे ततो हृदि नाभिमण्डले गुह्ये तथा सर्वाङ्गे चिन्तयेत्तथा पूरकेण वरारोहे कण्ठदष्टोऽपि जीवति ।

"ॐ गं गणपतये महागणपतये विघ्नहराय मतङ्गसंभवाय लम्बोदराय गौरीप्रियपुत्राय ह्रीं गां नमः रं हं क्षः स्वाहा ।" गोरोचना-विषराजिका–पिप्पली-नीचयवैर्महातैलैन सह देवदत्तैश्च लक्षितानालिखेत्, निम्बकाष्ठेन प्रतिकृतिं हुत्वा पृष्ठतो लिखेत् सद्यो ज्वरविलोपो भवति शान्तिर्भवति ॥

इति श्रीशिवपार्वतीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते

उड्डामरेश्वरमहातन्त्रे मन्त्रकोषनिरूपणं
द्वादशः पटलः ॥ १२ ॥

---

अथ

# त्रयोदशः पटलः ।

"ॐ ह्रीं विद्यास्तम्भिनि स्तम्भिनि छः छः स्वाहा ।" इमं मन्त्रं प्रथममयुतमेकं जपेत् पश्चान्मनसा संस्मरेत् । वनमध्येऽपि भोजनं प्राप्नोति ।

"ॐ ह्रौं नमो भगवते महारुद्राय उड्डामरेश्वराय हुं हुं छं छं ह्रीं ह्रीं स्वाहा ।" अनेन मन्त्रेणाभिषेकार्थं सहस्रवारजप्तं कलशं कारयेत्, तन्मध्ये पञ्चरत्नं निधाय श्वेतवस्त्रेण वेष्टयेत्, नानाफलसुसंचूर्णं नानारत्नोपशोभितं तदुद्धारकगृहवासं कलशं धृत्वा रात्रौ स्त्रिया सह श्मशाने वनस्पतौ वा एकवृक्षे वा सरितटे समुद्रगामिन्यां नद्यां वा चतुष्पथे वा गच्छेत् । ततश्च कलशं नीत्वा स्त्री वन्ध्या वा मृतवत्सा वा दुर्भगा वा काकवन्ध्या वा भङ्गा सर्वजनप्रिया भवति, पीडिता उद्वर्तयेत् । प्रियङ्गुः कुङ्कुमं गोरोचना नागकेसरो दूर्वा हरिद्रे द्वे सिद्धार्थकद्वयं वचा पुनर्नवापामार्गोऽर्कश्चित्रकं शाल्मली लक्ष्मणा तालमूली शतावरी वन्ध्या कर्कटी बला क्षीरिणी मृगपिप्पली तथा चिराणि सुपत्राण्युशीरं घृतं मधु तथा पलाशपुष्पपत्राणि अम्बराबिल्वपत्राण्यश्वगन्धादीनि सुगन्धद्रव्याणि सर्वाणि सर्वं साध्यविशेषतः, अन्यदुद्वर्तयेद्गात्रं शिरोलेपनो

यः पुनः कलशं प्रक्षिप्य स्नापयेत् लभते स्त्रियं, सदा उद्वर्तनवस्त्रं त्यक्त्वा परवस्त्रपरिधानं कुर्यात्। भद्रासने व्येवस्थिता.........कुर्याद्वारि निःक्षिप्य कुम्भस्थितं, या स्त्रीणां मध्ये समाकर्षयति यन्त्रं, ततस्तां संमुखस्त्रियमर्चयेत् ।

वस्त्रालङ्कारसिन्दूरसुगन्धिकुसुमादिभिः ।
गृहऽर्चां कारयेद्देवं शिवं देव्या सहार्चयेत् ॥ १ ॥
दक्षिणां स पुमान् दद्यात् श्वेतां गां वत्ससंयुताम् ।
अथ स्नानफलं वक्ष्ये यथोक्तं त्रिपुरारिणा ॥ २ ॥
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
शान्त्यर्थी शान्तिमाप्नोति दुर्भगा सुभगा भवेत् ॥ ३ ॥
भ्रष्टराज्यस्तथा राजा राज्यं प्राप्नोति निश्चितम् ।
अभार्यो लभते भार्यां सुखार्थी सुखमाप्नुयात् ॥ ४ ॥

इति स्त्रीपुरुषयोः स्नानफलम् ॥ "हुं अमुकं हुं फट् स्वाहा।" श्मशाने गत्वा उलूककपोतकाक्षीराणामतिसत्वरं स्तन्यं गृहीत्वा जपेत् सप्ताहेन ॥ "हुं अमुकं फट् फट् स्वाहा" अनेन मन्त्रेण भानुवृक्षसमीपे स्थित्वायुतैकं जपेत्, ततः कटुतैलेन दशांशेन हवनं कुर्यात् निपातीकरणं भवति ॥

"ओं ओं ओं" इति मन्त्रं पूर्वमयुतं जप्त्वानावृष्टिकाले जपेन्महावृष्टिर्भवति॥ "ओं ह्रीं वरदे स्वाहा।" इमं मन्त्रं पूर्वमयुतं जप्त्वा तद्दशांशं पलाशसमिद्भिर्हवनं कुर्यात् घृतं हुनेत्, ततः सार्वकालिकं फलं लभेत् ॥ "हुं हुं हुं नं नं नं अमुकं हुं फट् स्वाहा।" इमं मन्त्रं पूर्वमयुतं जप्त्वा खादिरसमिधो रुधिरेण लिप्त्वा तद्दशांशं हुनेत् यस्य नाम्ना स सहस्रेकेन महेन्द्रज्वरेण गृह्यते, अयुतहवनेन निपातनं, तथानेनैव

मन्त्रेणापामार्गसमिधो हुनेत् अयुतसंख्यकाः त्रिमधुयुताः, ततो विभीषणादयो राक्षसा वरदा भवन्ति ॥ "ॐ हूं वां वीं वूं वैं वौं वं वः ॐ हुं फट् स्वाहा।" अयं ज्वरग्रहणमन्त्रः ॥

"ॐ ऐं क्षिलि किलि फट् स्वाहा।" अनेन मन्त्रेण त्रिमधुयुक्तमुडुम्बरं पूर्वमयुतं जप्त्वा सहस्रैकं होमयेदनावृष्टिकाले महावृष्टिं करोति ॥ "ॐ द्रां द्रीं द्रूं द्रैं द्रौं हः ॐ स्वाहा।" इमं मन्त्रं पूर्वमयुतं जप्त्वा त्रिमधुयुता बिल्वसमिधो हुनेत्, ततः समस्तजनपदाः किंकरा भवन्ति ॥ "ॐ द्रीं ॐ द्रीं हुं ॐ स्वाहा।" इमं मन्त्रं पूर्वमयुतं जप्त्वा तद्दशांशं दर्भसमिधो घृतक्षीरयुता हुनेदयुतहोमतः सर्वरोगप्रशान्तिर्भवति॥

"ॐ क्लीं अमुकीं खे खे स्वाहा।" इमं मन्त्रं पूर्वमयुतं जुहुयात् तद्दशांशं न्यग्रोधसमिधो मधुयुक्ता हुनेत्, सहस्रमात्रहोमेन महाराजपत्नी वशगा भवति, अन्यलोकस्त्रीणां तु का कथा ॥ "ॐ ह्रीं गोमुखि गोमुखि सहस्रसुताला भीमभोगपिशितभूमौ आगच्छतु स्वाहा ॥" अनेन मन्त्रेण रक्तकरवीरं क्षौद्रेण संयुक्तं हुनेत्, वशकामो लवणं हुनेत् स्त्रियमाकर्षयति, पूर्वसंयुक्तं प्रेमकामः सिन्दूरं हुनेत् पुरक्षोभो भवति, तुषकरटं हुनेदभिचारकर्म भवति, महामांसं घृतसंयुक्तं हुनेत् महाधनपतिर्भवेत् ॥

"ॐ नमो भगवते रुद्राय उड्डामरेश्वराय हुं फट् स्वाहा।" अनेन मन्त्रेण श्रीफलसंयुक्तं घृतं हुनेत्, शतहोमेन प्रज्ञा भवति, सहस्रेण गोलाभो भवति, लक्षेण ग्रामसहस्रलाभो भवति, सपादलक्षेण अष्टराज्यं राजा प्राप्नोति ॥

"ॐ ऐं ह्रीं हुं फट् स्वाहा।" अनेन मन्त्रेण काकमांसं

कुक्कुटबीजं कटुतैलेन हुनेत् सहस्रैकेन ह्रींकारान्तं नाम संजप्य यस्य नाम्ना जपेत् स चोन्मत्तो भवति, सहस्रैकेन तण्डुलहोमेन सुस्थो भवति ॥ "ॐ ऐं श्रीं ज्ञं क्लीं स्वाहा।" अनेन मन्त्रेण जपः कार्यः सप्तवारजप्तेन देहशुद्धिर्भवति, शतजप्तेन सर्वतीर्थस्नानफलं भवति, सहस्रेण धीवृद्धिः, अयुतेन सहस्रग्रन्थकर्ता महान् कविर्भवति, एकलक्षेण श्रुतिधरो भवति, द्विलक्षेण समस्तशास्त्रज्ञो भवति, त्रिलक्षेणातीतानागतवर्तमानज्ञो भवति, चतुर्लक्षेण ग्रहपतिर्भवति, पञ्चलक्षेण वेदवेदान्तपुराणस्मृतिविशेषज्ञो भवति, षड्लक्षैर्वज्रतन्तुर्भवति, सप्तलक्षैर्नदीं शोषयति, हरिहरब्रह्मादिषु सख्यं भवति, नोचेत् वज्रोक्तेन विधिना जपेत् तदा संस्कृतोऽयं दर्शकेन वा महर्षिणा शतेन समो भवति, सहस्रेण सन्तापरहितो भवति, पुनरप्ययुतेन पुरक्षोभको भवति, षड्गुणेन त्रैलोक्यं क्षोभयति, तृतीयेन सप्तपातालं क्षोभयति, चतुर्थेन स्वर्गं क्षोभयति, पञ्चमेनोर्ध्वगान् सप्तलोकान् क्षोभयति, षड्गुणेन त्रैलोक्यं क्षोभयति, सप्तमेन द्विपदचतुष्पदादिप्राणिमात्रं क्षोभयति, अष्टमेन स्थावरजङ्गममाकर्षयति, नवमेन स्वयमेव सर्वलोकेषु नारदवदनावृतगतिर्भवति, दशलक्षेण कर्तुमकर्तुमन्यथा कर्तुं क्षमो भवति। पुनरप्यमृतक्षेपणविधिना जपेत्, सकृदपि नरः श्वेतकरवीरकुसुमत्रिमधुयुक्तामाहुतिं दद्यात् सर्वजनप्रियो भवति, अशोकपुष्पाणि सघृतं हुनेत् शोकरहितो भवति, भ्रष्टराज्यप्राप्तकामः श्रीफलहोमं कुर्यात् भ्रष्टराज्यं प्राप्नोति, आज्ययुक्तपद्मपुष्पाणि अथवा कुमुदिनीपुष्पाणि होमयेत्। निपात-

कामः कटुतैलयुक्तं मयूरमांसं हुनेत् कूटेन मरणं भवति । पूगीफलं कटुतैलं लोहचूर्णं च हुनेत् समस्तदेहे विस्फोटका भवन्ति । चीरिपत्रबिल्वपत्रहोमेन शान्तिर्भवति । तिल-समिधः सकटुतैला हुनेत् तेन विद्वेषणं भवति । धत्तूरचूर्णं सास्थिचूर्णं सकटुतैललोहचूर्णं च हुते शीघ्रं शत्रुनाशो भवति । महामांसं सघृतं हुनेत् मनोभीष्टं सर्वं भवति ॥

इति श्रीशिवदेवीसंवादे वीरभद्रेश्वरतन्त्रोद्धृते
उड्डामरेश्वरमहातन्त्रे मन्त्रकोषनिरूपणं
त्रयोदशः पटलः ॥ १३ ॥

---

अथ

## चतुर्दशः पटलः ।

"क्लीं कामातुरे काममेखले विषयिणि वररति भगवति अमुकं मे वशं कुरु वशं कुरु क्लीं नमः स्वाहा।" अनेन मन्त्रेण भोजनकाले सप्त ग्रासान् सप्तवाराभिमन्त्रितान् भुञ्जीत। सप्तमे दिवसे स्त्री वा पुरुषो वा वशीभवति स्वं च ददाति ।

"ॐ हुं स्वाहा ।" इमं मन्त्रं त्रिसंध्यं जपेत् शत्रुनाशो भवति । "क्लीं कालिकालि महाकालि कोले किन्या स्वाहा ।" इमं मन्त्रं पूर्वमयुतं जप्त्वा संध्याकाले सहस्रैकं होमयेत्, ततः कङ्काली वरदा भवति, सुवर्णचतुष्टयं प्रत्यहं ददाति ॥

"ॐ द्रीं द्रीं द्रं द्रैं द्रौं द्रः हुं नमः स्वाहा ।" अनेन मन्त्रेण पूर्वमेवायुतं जप्त्वा केवलमाज्यं हुनेत् अस्मादाकर्षणं भवति॥

"ॐ द्रौं द्रौं ह्रीं ह्रीं हुं नमः स्वाहा ।" अनेन मन्त्रेण पूर्वविधिना जप्त्वार्द्धमासादाकर्षणं भवति ॥ "ॐ हूं ॐ हूं हूं ह्रीं स्वाहा ।" इति पूर्वखड्गभेदः ॥ सर्वसञ्जीवनीमन्त्रः—"ॐ हुं द्रीं द्रं द्रौं द्रः हुं हुं ।" अनेन मन्त्रेण सर्वज्वरनाशनं भवति ॥ "ह्रीं हं सिनि स्वाहा ।" अनेन मन्त्रेन सर्वजनवशीकरणम् ॥ "ॐ ह्रीं नमः ह्रीं फट् स्वाहा ।" इमं मन्त्रं साध्यनाम्नायुतं जपेत् शवासनस्थितो हृदयं न प्रकाशयेत् ............(?)अमुकीं तां............(?)संगृह्य गुटिकां कृत्वा मुखे प्रक्षिप्य विद्याधरत्वं भवति ॥ "ॐ ह्रीं हुं नमः ।" इमं मन्त्रं पूर्वविधिना जपेत् पादुकासिद्धिर्भवति ॥ "ॐ त्वं त्वं ह्रीं हुं फट् स्वाहा ।" इमं मन्त्रं पूर्वक्रमेण जपेद्वेतालसिद्धिर्भवति ॥ "ॐ ह्रीं स्वाहा ।" अनेन मन्त्रेण नरकपालं गृहीत्वा तस्मिन्नरतैलं दत्त्वा तस्मिन् वायसचक्षुःसंवर्द्धिनीं वर्तिकां प्रज्वालयेत्, कृष्णपक्षामावास्यायां शनिवारे अन्धकूपे श्मशाने वा शून्यायतने वा कज्जलं पातयितव्यं, तावत्कालं पूर्वोक्तं मन्त्रं जपेत् यावता कालेन वर्तिशेषं प्रज्वलति, अवसाने प्रभूतबलिदानं कर्तव्यं, तत्र बलिस्तम्भमादाय तेन सिद्धाञ्जनेनाञ्जितनयनः सुरासुरैरपि न दृश्यतेऽन्यलोकस्य का कथा ॥

"ॐ हूं ह्रीं हूं ह्रैं ह्रौं हः ह्रीं ह्रीं" इति शङ्खिनीविद्या । "ॐ ह्रीं हुं" इति पुष्पाञ्जलिवेधः । "हुं हुं" इति हुंकारवेधः ।"ॐ ह्रीं हुं"इत्यालयवेधः । "ह्रां"शिवावेधमन्त्रः । "ह्रीं" इति भ्रमरावर्तसंघट्टवेधः ।"ॐ ह्रीं हुं छः छः स्वाहा ।"लोहत्रिशूलं कृत्वा रुधिरेण विषं पिष्ट्वा तेन त्रिशूलं लिप्त्वायुतेनाभि-

मन्त्रितं कृत्वा यस्य नाम्ना भूमौ निखनेत् तस्य शीघ्रं मृत्युर्भवति ॥

"ऊँ ह्रींकारि हूंकारि कपालि समावेधं बन्धुं नपुंसकं महाशये अभयङ्करि अमराख्यं कुरु कुरु ज्वरं हन हन आक्रोशात् कोलाहलं परां शक्त्याकर्षिणीं सर्वशक्तिप्रसङ्गिनीं शान्तिके हुं फट् स्वाहा ।" इमां महाविद्यां शत्रुवशङ्करीं मनसा स्मरेत् स सर्वत्र निर्भयो भवति ॥

"ऊँ ऊँ ऊँ हं हं हं हं सां सां सां सां" इमं मन्त्रं जपित्वा स्थावरजङ्गमविषनाशनं भवति ॥"ऊँ अस्थि यस्थि विद्रानिद्रा सन्निविद्या रा टं टीं द्रीं समासं मटंटीं छं छं ।" अनेन मन्त्रेण काकपत्रं सहस्रैकं हुनेत् यस्य नाम्ना तमुच्चाटयति ॥

"स्त्रीं हं" अनेन मन्त्रेणायुते जप्ते सति कवित्वविद्या भवति, स्त्रीमणिशकुनविद्यां हि संजपेत् झटिति कवित्वं करोति ॥ "हं ऐं हं हं ऐं वद वद वाग्वादिनि स्वाहा ।" इमं मन्त्रं सप्तवारं जप्त्वाधिकाधिकं कवित्वं च करोति ॥ "ऊँ हं छं छं छं ऐं नमः स्वाहा ।" सहस्रजपादधिकाधिकं कवित्वदोऽयं मन्त्रः ।

"ऊँ कं खं गं घं चं छं छं" अविलम्बं वक्तुः स्तम्भयति वाचं आलोकनात् । "हुं हुं हुं हुं खं खं खं खं छं छं" वाचां स्तम्भिनी वायुसञ्जीवनी विद्या । "द्रीं" आलोकवेधः परोक्षवेधः । "ह्रीं" सर्ववेधनमन्त्रः । "द्रं द्रौं द्रौं द्रौं द्रूं अमुकं भेजि भेजि ह्रीं छं छं छं" इति विस्फोटकसंजीविनी अवलोकनात् कार्यसिद्धिकरी ॥ "ऊँ द्रां द्रीं पूर्वराक्षसान्नाशय सर्वाणि भञ्जय सन्तुष्टा मोहय महास्वने हुं हुं फट् स्वाहा" इति

सर्वभूतमारणमन्त्रः । "ॐ ह्रीं सः द्रां छः छः छः" दूर्वाक्षीरहोमेन सर्वशान्तिकरी विद्या ॥ "हुं पञ्चाण्डं चाण्डं द्रीं फट् स्वाहा" अनेन मन्त्रेण मनुष्यास्थिकीलकं सप्ताङ्गुलं सहस्रधाभिमन्त्रितं यस्य गेहे निखनेत् तस्य कूटमुत्सादिनं भवति, उद्धृते सति पुनः स्वास्थ्यं भवति ॥ "हुं त्वं अमुकं फट् स्वाहा" अनेन मन्त्रेण पेचकपक्षिमांसं कटुतैलेन संयुतं होमयेत्, सहस्रहोमेन शत्रुं निपातयति ॥ "ॐ श्रीं श्रीं ह्रीं ह्रीं धुं धुं हं हः स्वाहा ।" इयं हि त्रैलोक्यविजयानाम्नी विद्या। मनसा स्मरेत् सर्वकामप्रदोऽयं मन्त्रः ॥ "ॐ ऐं ह्रीं श्रीं क्लीं विश्वरूपिणि पिशाचिनि भूतभविष्यादिकं वद वद मे कर्णे कथय कथय हुं फट् स्वाहा ।" इमं मन्त्रं शुक्लप्रतिपदमारभ्य पूर्णिमापर्यन्तं सहस्रैकं त्रिसंध्यं जपेत्, प्रत्यहं पूतं जलं सघृतं भक्तपिण्डं हर्म्योपरि रात्रौ दद्यात्, त्रैलोक्ये यादृशी तादृशी वार्ता साधकस्य कर्णे भूतभविष्यादिकं च कथयति ॥

"ॐ रं रां सं सां लं लां हं हः संसः खंखः तंतः धंसं स्फुं स्फः ह्रीं हुं हुं हुं क्लीं क्लीं क्लौं सौं सः छं छः धंसः स्फुं स्फः ह्रीं हुं हुं हुं क्लीं क्लीं क्लौं सं फं फः हुं फट् स्वाहा ।" अयं समस्तविषनाशनमन्त्रः । "सचराचरे ॐ सचराचरे ॐ हूं हुं हं हं हं हं हं हं हं हं हं हं क्षक्षः हसः ॐ सं हुं ह्रीं सर्वेश विष्णुबलेन शङ्करदर्पेण वायुवेगेन रवितेजसा चन्द्रकान्त्या वैरं बाणशूर्पणं सर्वं विषहरं वद सर्वरक्षांसि हि नाशय २ भञ्जय २ सर्वदुष्टान् मोहय २ देव हुं फट् स्वाहा हुं फट् स्वाहा ।" इमं मन्त्रमष्टोत्तरसहस्रं शतं वा जप्त्वा सप्तमे

दिवसे सिद्धिः समाकर्षणं भवति ॥

"ॐ ह्रीं अमुकं छः छः" अनेन मन्त्रेण मानुष्यास्थिमयं कीलकमेकादशाङ्गुलं सहस्रेणाभिमन्त्रितं यस्य गृहे निखनेत् तस्य कुटुं चोत्सादनं भवति, उद्धृते पुनः स्वास्थ्यं भवति ॥

"ॐ ह्रीं काल कङ्काल महाकाल करालवदन अमुकं गृह्ण त्रिशूलेन भिन्द्धि २ खड्गेन छिन्द्धि २ हुं फट् छः छः स्वाहा ।" अनेन मन्त्रेण विभीतककाष्ठकीलकमेकविंशत्यङ्गुलं सहस्रेणाभिमन्त्रितं यस्य गृहद्वारे निखन्यते तस्य सद्यो देहनिपातनं भवति ॥ "ॐ ह्रीं क्लीं श्रीं हुं अमुकं छः छः ।" अनेन मन्त्रेण सिद्धिकाष्ठमयं कीलकं नवाङ्गुलं सहस्रेणाभिमन्त्रितं यस्य गृहे निखन्यते स वश्यो भवति ।

"ॐ ह्रीं श्रीं क्लीं मातङ्गिनि ऐं ह्रीं श्रीं क्लीं स्वाहा ।" अनेन मन्त्रेण राजिकां लवणघृतामिश्रितां यस्य नाम्ना सहस्रैकं होमयेत् तां स्त्रियं पुरुषं वा वशयत्याकर्षणं च करोति ॥

"ॐ ह्रीं हूं छः छः ।" अनेन मन्त्रेण वाडवकाष्ठमयं कीलकं त्रयोदशाङ्गुलं सहस्रेणाभिमन्त्रितं यस्य गृहे निखनेत् स चक्षुर्भ्यामन्धो भवति ॥

"ॐ छः ॐ छः छः ।" अनेन मन्त्रेण बिल्वकाष्ठस्य कीलकं दशाङ्गुलं सहस्रेणाभिमन्त्रितं यस्य गृहे निखनेत्, सपरिवारस्य तस्य प्रेतत्वं भवति ॥ "ॐ ह्रीं अमुकीं मे प्रयच्छ स्वाहा ।" अनेन मन्त्रेण पाटलाकाष्ठमयं पञ्चाङ्गुलं कीलकं सहस्रेणाभिमन्त्रितं यस्य नाम्ना देवतायतने निखनेत् स शीघ्रं कन्यां लभते ॥

इति श्रीशिवप्रोक्ते वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरे-

श्वरमहातन्त्रे मन्त्रकोषकथनं चतुर्दशः पटलः ॥ १४ ॥

---

अथ

## पञ्चदशः पटलः ।

षट्कोणं यन्त्रं लिखित्वा तत्र षट्कोणे "ॐ कुरुकुल्ले स्वाहा" इति मन्त्रं पूर्वकोणे लिखेत्। "कुरु" इत्यक्षरद्वयमपरकोणे लिखेत् । अक्षरैकं पूर्वावर्तक्रमेण लेखितव्यम् । ततो भूर्जपत्रे इमं मन्त्रं लिखित्वा गृहद्वारे देहल्या एकदेशे धृते सति गृहसर्पमुच्चाटयति, विवरद्वारि धृते विवरस्थो नश्यत्येव ।

रक्तकरवीरपुष्पमाम्रपत्रभस्मना लिप्तं तत्क्षणादेव शुभ्रं भवति, तथा गन्धकधूपेनापि भावितेन शुक्तिर्भवति । लोके हयमार इत्याख्यस्य रक्तकरवीरस्य पुष्पं तूलवर्तिकागन्धकेन सह संयोज्य तत्क्षणादेव ज्वलति । तथा टङ्कनहरिद्राभ्यां कृते लेपे कुङ्कुमकान्तिर्भवति ।

पुराणशुष्कगोमयं यदा जले पातयेत् तदा भीमोष्मणा तस्माद् बुद्बुदमुत्पद्यते। एवं गौरं तु भूम्युपरि भूतलं स्पृष्ट्वा रक्तकरवीरवृक्षो जायते इति। रूपके ताम्रे भ्रमर इव कुम्भे समर्पयेत् किञ्चिदनुयोगित्वेन मनोनुरागो भवति ताम्बूलरागतः, नश्यति हरिद्रारागो रविकिरणात् ।

ॐ हुं सति कुरुपाक्षिशब्दतः (कुरलकुङ्कुमेन इति प्रसिद्धिः) क्रौञ्च इत्यपि तस्य नाम जिह्वाङ्कीकृतं, वामकरतलमध्यल-

ग्नपरिलेपं दर्शयित्वा उदितविश्वधाराभस्मना पुनरपि करतललग्नात् प्रदर्श्य गत्याश्चर्यमते शिशुदुग्धभावितात् शोधयित्वा गव्यादिदुग्धं चोष्णं कांस्यपात्रे कृत्वा तीक्ष्णतरं धृत्वा तण्डुलनिक्षेपणेन क्षीरं भवति ।

भूर्जपत्रपुटकं तिलतैलेन दीपयित्वा विविधभक्ष्यान्नं साधयेत् यथा लौहभाजने साध्यते । वार्ताकरञ्जिकाफलमिति तत् सूत्रेण वेष्टयित्वा दीपयित्वा च ज्वालयेत्, तेनाविसूत्रेण वेष्टिते च सूत्रं संदह्यते वार्ताकश्च पच्यते ।

आदिपंक्तौ सप्त स्वरान् संलिख्य तदधःपंक्तौ कादिसप्तवर्गान् संलिख्य, तदधःपंक्तौ हरिद्रादिक्रमेणालेखनीया, तत्र स्वरवर्णयोजनेन संकोचनादक्षरकोष्ठादिसंस्पर्शनात् संजायते । बहुषु मध्येषु दत्तसंज्ञाकृतसंकेतश्चौरः स्वदृष्टिमपि सप्तसप्तस्वरादौ जानाति । व्यापारमध्ये क्षणरासिकश्चौरो ज्ञायते कुतो भद्रद्रव्ये ।

कुत्रापि धत्तूरकबीजं क्षिप्त्वा तद्वा भक्षति तदा तद्गुणादिफलं लभ्यते 'असौ चौरः' इति । स्वल्पचरचौरास्तु वस्तुलाभे प्रदातारः । क्षीर्यर्कादिवृक्षदुग्धेन संलिखितं चौरनामाक्षरं करतलेऽपि लिखितमनन्तरं भूर्जपत्रे कृतमपि मर्दने स्पर्शयित्वा भक्षितुं ततो ददाति, अपरि लिखितं चौरनाम पत्रयुक्तं च अरिगृहगर्भमृत्तिकाकाण्डकं भवति । जले साधुनाम, पत्रयुक्तमृत्तिका च जले मज्जति ततः स्पृष्ट्वा क्रियते 'असौ चौरः' इति । क्षीरितरुदुग्धलिखितक्षुद्रलेखे अङ्गारचूर्णेन मर्दिताः स्पष्टा भवन्ति ।

कूटोऽपि विपरीतालिखितवर्ण आदर्शादौ प्रतिकृतिभावापन्नो

वर्णवैपरीत्यात् प्रतिविवर्द्धितन्यासः अतिदृढा मसी भवति ।

निम्बतालके समताम्रभाजने याममात्रमर्दितेन विधिरस्तु(?) समभागता यथा— आमलकी–हरीतकी–विभीतकनिम्बखादिराणाम् ,नीराख्याराजकरवीररसैः समस्तरसकज्जलमुक्तमर्दनप्रकारेण याममात्रेण प्रत्येकं येन प्रकारेण मसिद्रव्यं जायते ।

शिरीषवृक्षत्वक्चूर्णं खदिरं विना ताम्बूलरागं जनयति । तिर्यक भूमौ नारिकेलफलमस्थिसहितं मुखेन कर्णिकायामेकेन प्रहारेण द्विधा भवति । लघुकाष्ठसूक्ष्मरचितपादुकां विना पादैकं वा भ्रमति । गुञ्जाफलास्थिलिप्तं स्तम्भितं तदुत्तरपादं प्रयोज्य प्रपदात्यन्तं भ्रमति, तदा पादतले तालकारलग्ना उत्तिष्ठति। एवं लघुकाष्ठनिर्मितासमकः पापपुरहासार्थं(?) दत्तमुखवेष्टं किंचित् यस्तेन सितवस्त्रादौ कथ्यां लग्नमुपतिष्ठमानस्तिष्ठति ।

एवं निविडाम्बरापिहितजम्बादौ अधोमुखकांस्यभाजननिहितमङ्गारं न दहति वस्त्रं, दहति चापि शिशिरजलमिश्रितमपि आनतफलचूर्णभावितकलशः तीक्ष्णश्च कांस्यभाजननिहितं गुरु(डुना)प्यशक्तं न भवति तदानीं तिक्तं याति यच्छुक्तं मिष्टमेति, कज्जलचाविकाचूर्णाभ्यां क्रमसंलिखितपुस्तकमध्यकारणेऽपि यथेष्टया पच्यते–यथा कटाहे रम्यतरं मधुनाग्निप्रज्वालिते सकुण्डादौ जलपूर्णे अधोमुखे उज्ज्वलं स्वयमेति धूमाभ्यां स्वयमुद्गिरति वर्तिद्वये शशविष्ठापूर्णगर्भे कमठैरधोवर्तिविष्ठायितापि उपरि ज्वलज्ज्वालाज्वालितवर्तिज्वालामपि ज्वलितधूममङ्गारतीक्ष्णशिखया नाडिकादौ । वालिवातेऽयं प्रयोगः कार्यः ।

वामकराङ्गुलिपर्यन्तं गोपितं सूत्रचिह्नमप्यचिह्नं च दृश्यते जनस्य विषमसमाक्षरेण वीक्षिते कालः असममपि पुरुषं जानीयात् । पक्वदाडिमे शिखरे मसिगुणिते यद्वि भवति तावत् गुटिके विजानीयात् । अकालवक्रे सति कालमथफलचूर्णेन मिलित्वा भस्मना सह घृतेन काकाञ्जिका सहसा भवति ।

अगाधस्थिरजले धूमचूर्णेन लिखितचिन्तादि भीतवद् भाषते, न निमज्जतीति । समदशघृतजधृतसमावेशार्धं धृतमूषलं तिष्ठति (?) ।

पुष्यनक्षत्रे कुङ्कुमावर्तितेन वाणेन दूरस्थमपि लक्ष्यं बालोऽपि विध्यते । षण्डं गोमयानां वर्तिदीपकान्त्या दग्धं मध्ये हतशशरुधिरं दृश्यते तत्रापि तैलं यत्किञ्चिदिति ।

श्वेतार्कफले तूलकं सर्षपसमं तैलेनैकीकृतवर्तिकादीपज्वालायां गृहोपरिवंशादिदारु सर्वं सर्प इव दृश्यते । भुजगतैले सच्छिद्रभाण्डेभुजङ्गं क्षिप्त्वा अच्छिद्रभाण्डान्तरे ववस्थितमग्निपातेन जलं ज्वलति । तदैव तैलं पूर्वप्रकारेण कृष्णाष्टम्यां मण्डूकतैलाङ्कितेन सर्वं शात्रव सर्वं (?) भवति । दीपकान्त्या दीपयित्वा यत्किञ्चिच कुक्कुटपक्षिचञ्चवादिचिदग्धनाललक्षिता सती हृता लेखा यदायाति हरिकपालं धृत्वा भवति तदा तज्जलपूर्णं च कलशं रिक्तकं भवति , ( गर्दभाचारजो ! ) तथा मरिचशुण्ठी पिप्पलीचूर्णेनोभाभ्यां वामचरणतलं लिप्त्वा तेनाहतो वृक्षः कल्पवृक्षश्च नमेरुफलं प्रसूयते ।

कृष्णा गौः प्रसवकाले तद्वत्समानवर्णे जरायुरागतत्वेन

प्रजारेण्डला फलं दृष्ट्वा मुष्टिगृहीने उच्चैस्तमसि फलं प्रायेण कृत्वा प्रदास्यति तथा कालायितमुद्रिका वरगोस्तनी स्यादा पानिता गृहीता निक्षिप्ता तु अष्टौ पूर्वफलानि जनयति । समुस्ताहरितालमनःशिलाभ्यां नवनीतादियोगेन कारिताञ्जने मयूरस्य विष्टया कृत्वा हस्तं लिम्पेत्, तत्र स्थितं द्रव्यं ब्रह्मापि न पश्यति । समुखं फलचूर्णं मिश्रोद्वर्तनकाजले क्षिप्त्वा क्रिमिसहस्रतुल्यं दृश्यते । हयकालयिकस्य शोषितस्य चूर्णं यवशीर्षकेण समुद्वर्तनेन तात्कालिकं सूक्ष्मजले निःक्षिप्य सबीजं कृषिरुच्चलति ।

अधःपटेनाशस्यावश्यादि दृष्ट्वा पादाग्रस्थितं द्रव्यं दृश्यते । जपाकुसुमोद्वर्तिताङ्गं छुरिकादौ कणाचितैककीटकाफलाख्यायन्त्रिते रुधिरवज् जडितं, क्षीरिवृक्षत्वगवभाविता तैलाक्ता वस्त्रवर्तिर्जलैर्ज्वलति । एवं समुद्रतैलयुक्तापि वर्तिका ज्वलति ।

द्रोणकपुष्पादीनि क्षुद्रपुष्पाणि चूर्णाग्रे विनिःक्षिप्य धत्तूरबीजानि जलसिक्तानि सजीववत् फलन्ति । इक्षुः कुक्कुटीबीजचूर्णेन सुदर्शनपत्रमिव तत्क्षणात् जायते । मसृणकर्पटं निर्मलकांस्यभाजनेऽर्कसंमुखं स्थापनेन वर्तुलकयोगादग्निरुत्तरति ॥

इति श्रीशिवप्रोक्ते वीरभद्रेश्वरतन्त्रोद्धृते उड्डामरेश्वरमहातन्त्रे पञ्चदशः पटलः, समाप्तमिदम् ॥ १५ ॥



## श्लोकसूची

## तन्त्रस्थौषधिनामानि ॥

| संख्या | औषधि | हिन्दी नाम | Botanical Names. | Page No. |
|---|---|---|---|---|
| १ | अञ्जन | अञ्जन | Memecylon Edule (Iron wood tree), | 7 |
| २ | अतिविषा | अतीस | Aconitum Heterophyllum | 14 |
| ३ | अधःपुष्पी | अन्धा हूली | Trichodesma Indicum. | 13 |
| ४ | अपामार्ग | ओंगा | Achyranthes Aspera. | 54 |
| ५ | अभया | हरड | Terminalia Chebula | 13 |
| ६ | अमृता | कांघनी | Selastrus Panicalta | 14 |
| ७ | अरिष्ट | अरीठा | Sapindus Trifoliatus (Soap nut). | 5 |
| ८ | अर्कः | आक | Calortopis Gigantea. Gigantic Swallow wort. | 54 |
| ९ | अश्वगन्धा | असगन्ध | Withania Somnifera | 54 |
| १० | आमलकी | आमला | Phyllunthus Embelica. (Emblic Myrobalan). | 16 |
| ११ | आस्फोटी | बनमल्लिका | Jasminum Augustifolium | 27 |
| १२ | उडुम्बर | गूलर | Ficus Glomerata | 56 |
| १३ | उन्मत्त | धत्तूरा | Datura Stramonium. (Devil's Apple). | 4 |
| १४ | उशीर | उशीर | Root of Andropogon Muricatus. | |
| १५ | एला | बडी इलायची | Amomum Sabulatum. | 17 |
| १६ | कङ्कोली | कंकोली | Jonesia Asoka | 27 |
| १७ | कञ्चुक | कैञ्चली | Cast off skin of a Snake. | 15 |

| संख्या | औषधि | हिन्दी नाम | Botanical Names. | Page No. |
|---|---|---|---|---|
| १८ | कणा | पीपर | Piper Longum. (Long Pepper). | 29 |
| १६ | कण्टक | कांटा बांस | Bambusa Arundinacea. (Thorny Bamboo) | 52 |
| २० | कतक | केतकी | Strychnos Potatorum | 15 |
| २१ | कनक | धत्तूरा | Datura Stramonium (Devil's apple). | 11 |
| २२ | कपित्थ | कैथ | Feronia Elephantum | 23 |
| २३ | कम्बुग्रीवा | कम्बुग्रीवी | Andropogon Aciculatus | 13 |
| २४ | करञ्ज | करंजुवा | Pongamia Gilabra, | 11 |
| २५ | करवीर | कनेर | Nerium Odorum. | 12 |
| २६ | कर्कटी | ककडी | Pistacia Integerrima | 54 |
| २७ | कल्क | बहेडा | Terminalia Bellerica. (Bedda Nuts). | 6 |
| २८ | काकजङ्घा | काकजङ्घा | Leea Hirta | 4 |
| २६ | काञ्जिका | जीबंती | Desmotrichum Fimbriatum | 12 |
| ३० | कुकुट | सीतावर | Marsilea Quadrifolia | 57 |
| ३१ | कुङ्कम | केशर | Crocus Sativas. (Saffron) | 7 |
| ३२ | कुमारिका | क्वारगंदल | Jasminum Sambac | 26 |
| ३३ | कुमारीत्वक् | क्वारगंदल की छाल | Bark of Jasminum Sambac | 13 |
| ३४ | कुलत्थं | कुलथी | Dolichos Biflorus | 17 |
| ३५ | कुष्ठं | कुठ | Sussurea lappa. | 17 |
| ३६ | क्षारं | नोसादर | Ammonium Chloridum. (Black Salt | 4 |
| ३७ | क्षीरिणी | थूहर | Euphorbia rerifolia | 54 |
| ३८ | क्षौद्रं | चम्पक | Michelia Campaka | 18 |

| संख्या | औषधि | हिन्दी नाम | Botanical Names. | Page No. |
|---|---|---|---|---|
| ३६ | खदिर | खैरी | Acacia Catechu. | 12 |
| ४० | गिरिकर्णिका | काली ज़ीरा | Clitoria Ternatea | 26 |
| ४१ | गिरिकर्णी | कटभी | Careya Arborea. | 3 |
| ४२ | गुग्गुल | गूगल | Commiphoro Mukul. | 3 |
| ४३ | गुञ्जा | घूंघची | Abrus Precatorius. | 9 |
| ४४ | गोमय | गोबर | Cow-dung | 4 |
| ४५ | घनसारं | कपूर | Comphora Officinarum. | 19 |
| ४६ | चन्दन | चन्दन | Santalem Album (Sandal-wood). | 13 |
| ४७ | चविका | चाय | Camellia Theifera (Tea) | 65 |
| ४८ | चित्रक | चीतावर | Plumbago zeylomica | 9 |
| ४६ | जटा | जटा | Fibrous root of Mucuna Pruritus | 29 |
| ५० | जपापुष्प | ओडहुल | The China rose | 53 |
| ५१ | जया | जयंती | Abutilon Avicennea (Indian Mallow). | 15 |
| ५२ | जाती | जयाफल | Myristica Fragrons. | 5 |
| ५३ | ज़ीरक | जीरा | Cumminum Cyminum. | 25 |
| ५४ | टङ्कन | तूत | The Mulberry | 63 |
| ५५ | तगरं | तगर | Valiriana, | 7 |
| ५६ | तालमूली | तालमूल | Curculigo Orchioides | 54 |
| ५७ | तुष | बहेडा | Terminalia Bellerica | 52 |
| ५८ | तिल | तिल | Sesamum Indicum. | 58 |
| ५६ | त्रिफला | हरड, बहेडा, आंवला | Fruits of Terminalia Chebula, T. Bellerica and Phyllanthus Embelica | 26 |
| ६० | दाडिम | अनार | Tunica Granatum. | 47 |

| संख्या | औषधि | हिन्दी नाम | Botanical Names. | Page No. |
|---|---|---|---|---|
| ६१ | दिव्यं | दिव्या | Tiaridium Indicum. | 13 |
| ६२ | दूर्वा | दूब | Cynodon Dectylon (Couch grass). | 54 |
| ६३ | धत्तूर | धत्तूरा | Datura Stramonium. (Devil's apple). | 13 |
| ६४ | धात्री | तालीस | Taxas Baccata | 12 |
| ६५ | नमेरु | नमेरु | Elaeocarpus Granitrus | 66 |
| ६६ | नवनीत | मक्खन | Butyrum Depuratum (Butter) | 14 |
| ६७ | नागकेसर | नागकेशर | Messua Ferrea. (Ceylon Iron-wood) | 13 |
| ६८ | नागदमनी | चिन्दार | Crinum Asiaticum | 27 |
| ६९ | निम्ब | नीम | Azadirachta Indica. | 3 |
| ७० | निर्मोक | कैञ्चली | Cast of skin of a snake. | 5 |
| ७१ | नीप | हलदू | Adina Cordifolia. | 26 |
| ७२ | न्यग्रोध | बड | Ficus Indica. | 17 |
| ७३ | पञ्चकोलं | पंचकोली | The five spices viz,, Long Pepper, its root, pipper Chaba, Plumbago and dry ginger. | 47 |
| ७४ | पटोलं | परवल | Trichosanthes Diocca. | 12 |
| ७५ | पद्म | कमल | Nelumbium Speciosum. (Lotus). | 12 |
| ७६ | पाटला | पाडर | Streospermum Tetragonum. | 62 |
| ७७ | पुनर्नवा | सांठी | Boerhavia Diffusa (Spreading Hogweed). | 54 |
| ७८ | पलाश | टेसू | Butea Frondosa | 54 |

| संख्या | औषधि | हिन्दी नाम | Botanical Names. | Page No. |
|---|---|---|---|---|
| ७९ | पिप्पली | पीपर | Piper Longum. (Long pepper). | 14 |
| ८० | पुराणिक | पुराणिका | Cyperus | 13 |
| ८१ | पूगीफल | सुपारी | Areea Catachu (Betel-nut.). | 58 |
| ८२ | प्रियङ्गु | कांघनी | Selastrus Panicalta | 9 |
| ८३ | बला | खिरैंटी | Abuliton Indicum | 54 |
| ८४ | बिल्व | बिली | Aegle Marmelos (Bael fruit tree) | 62 |
| ८५ | ब्रह्मदण्डी | ब्रह्मदण्डी | Tricholepsis Glaberrima | 4 |
| ८३ | भद्रमुस्त | नागरमोथा | Cyperus Rotundus. | 7 |
| ८७ | भल्लातक | भिलावा | Semicarpus Anacardium (Common Marking nut) | 9 |
| ८८ | भूमन्दरा | भूमन्दारा | Erythrina Indica | 47 |
| ८९ | भृङ्गराज | बाँगरा | Eclipta Prostrata | 26 |
| ९० | मञ्जिष्ठा | मजीठ | Rubia Manjishta. (The Indian Madder). | 13 |
| ९१ | मत्स्यपित्त | मत्स्यपित्ती | Helleborus Niger | 31 |
| ९२ | मद्रक | बधारा | Gmalina Asiatica | 8 |
| ९३ | मधुयष्टिका | घना | Sugar-cane. | 15 |
| ९४ | मधूक | महूवा | Bassia Latifolia | 29 |
| ९५ | मन : शिला | मनशिल | Red Arsenic. | 17 |
| ९६ | मरिच | काली मिरच | Piper Nigrum. (Black pepper). | 14 |
| ९७ | मातुलुङ्ग | नींबू | Citrus Medica. (Adams apple). | 16 |
| ९८ | मांसी | बालछड | Nardostachys Jatamansi | 5 |

| संख्या | औषधि | हिन्दी नाम | Botanical Names. | Page No. |
| --- | --- | --- | --- | --- |
| ९९ | मुद्ग | मूंग | Phaseshus-Trilobus. | 12 |
| १०० | रक्तचन्दनं | लालचन्दन | Pterocarpus Santalinus | 17 |
| १०१ | राजिका | राई | Eruca Sativa. | 4 |
| १०२ | रोचनं | गोरोचन | Bostanrus. | 7 |
| १०३ | लक्ष्मणा | कण्ठकारी सफेद | Ardea Sibirica. | 27 |
| १०४ | लज्जा | लाजवंती | Mimosa Pudica. (Touch Me Not). | 29 |
| १०५ | लवङ्गं | लौंग | Clove tree flower | 18 |
| १०६ | लवणं | नमक | Sodii Cleridum (Chloride of Sodium). | 4 |
| १०७ | लोध्रं | लोध | Symplocos Racemosa. | 13 |
| १०८ | लोहं | गजबेल | Agallochum. (Aloe wood) | 47 |
| १०९ | वचा | वच | Acorao Calamus. (Sweet flag). | 3 |
| ११० | वज्रीरसं | थूहर का दूध | Juice of Euphorbia Nerifolia). | 47 |
| १११ | वज्रं | थूहर | Euphorbia Nerifolia- | 13 |
| ११२ | वार्ताक | बेंगन | SolanumMelongena (Brinjal). | 64 |
| ११३ | वास्तुक | बथुआ | Chenopodium Album (Allgood). | 15 |
| ११४ | विभीतक | बहेडा | Terminalia Bellerica (Bedda nuts). | 8 |
| ११५ | विशालाक्षा | विशालाक्षी | Tiaridium Indicum. | 13 |
| ११६ | विष | बछनाग | Aconitum Ferox. | 4 |
| ११७ | विषराजिका | टरमेरा | Sinapis Ramosa. | 52 |

